# नीतिप्रकाशिका प्रथमोऽध्यायः

श्रीमद्गजाननं वाणीं नत्वा ब्रह्मादिसद्गुरून्
नीतिप्रकाशिका सेयं तन्यते ह्यादरान्मया १
श्रीमत्तक्षशिलायां तु सूपविष्टं वरासने
जनमेजयभूपालं द्रष्टुकामो महातपाः २
वैशंपायननामा तु महर्षिस्संशितव्रतः
अभ्यागात् सहितश्शिष्यैर्व्यासशिष्यो महामुनिः ३
तमायांतमृषिं श्रुत्वा जनमेजयभूपतिः
प्रत्युज्जगाम सहसा सह मंत्रिपुरोहितैः ४
पाद्यमर्घ्यं तथा गां च मधुपर्कं विधाय च
तस्मै प्रोवाच कुशलं प्रहृष्टेनान्तरात्मना ५
धन्योऽस्म्यनुगृहीतोऽस्मि यन्मे दर्शनमागतः
तारिताः पितरस्सर्वे पालितोऽहं त्वया मुने ६
इत्युक्तवन्तं राजानं प्रयुयोजाशिषश्शुभाः
धर्मे ते रमतां बुद्धिरित्युक्त्वागात्सभां ततः ७
उपविष्टे मुनौ तस्मिन् भद्रपीठे नृपोत्तमः
परिवृत्यासनाभ्याशे कृतांजलिरुपाविशत् ८
कथान्तरमथासाद्य जनमेजयभूपतिः
प्रणम्य तमृषिं भक्त्या कृतांजलिरभाषत ९
राजधर्माः कृतास्सर्वे भारतीयास्त्वयोदिताः
हृदि मे संशयः कश्चित् तं भवाञ्छेत्तुमर्हति १०
इतश्चानुदिनं धर्मस्सत्यं शौचं क्षमा दया
कालेन कलिना ब्रह्मन् क्षरत्यायुर्बलं स्मृतिः ११
वित्तमेव कलौ नृणां जन्माचारगुणोदयः
धर्मन्यायव्यवस्थायां कारणं बलमेव हि १२
दांपत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके

स्त्रीपुंस्त्वे कौशलरतिर्विप्रत्वे सूत्रमेव च १३
लिंगमेवाश्रमख्यातौ अन्योऽन्यापत्तिकारणं
अवृत्त्या न्यायदौर्बल्यं पाण्डित्ये चापलं वचः १४
असाध्यतैव साधुत्वे स्नानमेव प्रसाधनं
स्वीकार एव चोद्वाहे लावण्ये केशधारणं १५
उदरंभरिता स्वार्थः यशोऽर्थे धर्मसेवनं
दाक्ष्यं कुटुंबभरणे सत्यत्वे धाष्टर्यमेव हि १६
शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु
पाषण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु १७
कथं तेषामियं नीतिर्विस्तृता वशमेष्यति
धनुर्वेदविवेकश्च शस्त्रास्त्रज्ञानमेव च १८
इति तद्वचनं श्रुत्वा हृदयज्ञो महानृषिः
अर्थोपहितया वाचा राजानमिदमब्रवीत् १९
इङ्गितं ते मया ज्ञातं सूक्ष्मनीतिप्रबोधने
लब्धानुयोगः प्रब्रूयाच्छास्त्रं नो चेदधी भवेत् २०
ब्रह्मा महेश्वरस्स्कन्दश्चेन्द्रः प्राचेतसो मनुः
बृहस्पतिश्च शुक्रश्च भारद्वाजो महातपाः २१
वेदव्यासश्च भगवान् तथा गौरशिरा मुनिः
एते हि राजशास्त्राणां प्रणेतारः परंतपाः २२
लक्षाध्यायां जगौ ब्रह्मा राजशास्त्रे महामतिः
पञ्चाशच्च सहस्राणि रुद्रस्संक्षिप्य चाब्रवीत् २३
पञ्चविंशत्सहस्राणि स्कन्दस्संक्षिप्य चावदत्
दशाध्यायसहस्राणि द्विसहस्रे च वासवः २४
प्राचेतसमनुश्चापि षट्सहस्राण्यथाब्रवीत्
त्रीण्यध्यायसहस्राणि बृहस्पतिरुवाच ह २५
काव्यस्तु तत् समालोड्य चक्रेऽध्यायसहस्रकं

सप्ताध्यायशतं शास्त्रं भारद्वाजस्तथाभणत् २६
मुनिर्गौरशिराश्चापि पञ्चाध्यायशतं जगौ
वेदव्यासस्तु भगवांस्तत् संक्षिप्य महामतिः २७
शतत्रयाध्यायवतीं नीतिं चक्रे महामते
संक्षिप्तमायुर्विज्ञाय मर्त्यानां बुद्धिदोषतः २८
तल्लक्षणोद्देशमात्रं मया तव निवेद्यते
सावधानमना भूत्वा राजशास्त्रं निबोध मे २९
पृथुर्वैन्यः प्रजा रक्षन्मृत्युं जित्वा पुरा किल
क्षतत्राणात् प्रजास्तं तु क्षत्रियं चाब्रुवंस्तथा ३०
नामापि तस्य राजेति प्रजारागादजायत
अकृष्टपच्या पृथिवी चासीद्वैन्यस्य कामधुक् ३१
आसन्हिरण्मया दर्भास्सुखस्पर्शा मनोहराः
तेषां वीरैस्सुसंवीताः प्रजास्तेष्वेव शेरते ३२
प्रविभागो न राष्ट्राणां पुराणां चाभवत् तदा
यत्र यत्र प्रजा आसंस्तत्र दोग्ध्री मही सुखं ३३
तेन संस्तंभिता ह्यापस्समुद्रमभियास्यता
पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत् ३४
षष्टिं नागसहस्राणि षष्टिं नगशतानि च
सौवर्णान्यकरोद्राजा ब्राह्मणेभ्यश्च तान्यदात् ३५
इमां च पृथिवीं सर्वां मणिरत्नविभूषितां
सौवर्णामकरोद्राजा ब्राह्मणेभ्यश्च तां ददौ ३६
एतानन्यान् गुणान् बुध्वा तस्य राज्ञश्चतुर्मुखः
आत्मानं दर्शयामास वरदोऽस्मीति चाब्रवीत् ३७
ब्रह्माणं च ततो दृष्ट्वा श्रुत्वा चैव स तद्वचः
पृथुः परमसंहृष्टो वव्रे तं वरमुत्तमं ३८
चतुष्पाच्च धनुर्वेदस्सांगोपाङ्गरहस्यकः

शस्त्रास्त्रभूषितो मह्यं प्रदेयस्तु त्वया भवेत् ३९
आत्मानं परमं मन्ये लोकेभ्यो लोकपूजित
यस्य मे दर्शनं प्राप्तो भवान् वेदमयो निधिः ४०
इत्युक्त्वानन्ददुग्धाब्धौ मज्जयानं पृथुं तदा
प्रोज्जहार जगत्स्रष्टा वाचाथ प्लवरूपया ४१
दिष्ट्या ते बद्धिरुत्पन्ना धनुर्वेदपरिग्रहे
अहमप्येतदेव त्वां वक्तुकाम इहागतः ४२
असिः पूर्वं मया सृष्टो दुष्टनिग्रहकारणात्
भवादृशसमीपस्थो लोकांछिन्दञ्चरत्यसौ ४३
धनुराद्यायुधव्यक्तौ त्वमेवादिस्स्मृतो मया
तस्माच्छस्त्राणि चास्त्राणि ददानि तव पुत्रक ४४
भृशाश्वो मानसः पुत्रो द्वे जाये तस्य संमते
जया च सुप्रभा चैव दक्षकन्ये महामती ४५
जया लब्धवरा मत्तो शस्त्राण्यस्त्राण्यसूत वै
पञ्चाशदपरा चापि तावत्पुत्रानजीजनत् ४६
संहारान् नाम दुर्द्धर्षान् दुराक्रामान् बलीयसः
मन्त्रदैवतसंयोगाच्छस्त्राण्यस्त्रत्वमाप्नुवन् ४७
मत्सकाशाद्धनुर्वेदं प्रगृह्य जयतां वर
सर्वाः पालय धर्मेण प्रजाः पुत्रानिवौरसान् ४८
सन्धिविग्रहतत्त्वज्ञस्त्वनुमानविभागवित्
षाड्गुण्यविधियुक्तश्च सर्वशास्त्रविशारदः ४९
वृतो राजगुणैष्षड्भिस्सप्तोपायांस्तदाचर
बलाबलेन सम्यक् त्वं समीक्षस्व चतुर्दश ५०
अथ स्वात्मानमन्वीक्ष्य परांश्च रिपुसूदन
तथा सन्धाय कर्माणि सेवस्वाष्टौ सदा नृप ५१
भवानष्टादशान्येषु स्वपक्षे दश पंच च

त्रिभिस्त्रिभिरभिज्ञातैर्वेत्ति तीर्थानि चारकैः ५२
तथा व्यसनिनं शत्रुं निशम्य नृपसत्तम
अभियाहि जवेनैव समीक्ष्य त्रिविधं बलं ५३
धृत्वा यात्रामारभस्व प्राप्तकालमरिन्दम
पार्ष्णिमूलं च विज्ञाय व्यवसायं पराजयं ५४
स्वमूलं तु दृढं कृत्वा परान् याहि विशां पते
विक्रमस्व विजेतुं तं जित्वा च परिपालय ५५
दृढमष्टांगसंयुक्ता चतुर्विधबला चमूः
बलमुख्यैस्सुनीता ते द्विषतां प्रतिवर्धनी ५६
इत्येवमनुशास्यैनं ब्रह्मा लोकगुरुः पुनः
धनुर्वेदं ग्राहयितुं वक्तुमेवोपचक्रमे ५७

इति श्रीमन्नीतिशास्त्रे नीतिप्रकाशिकायां
संगतिप्रदर्शनपूर्वकराजधर्मोपदेशो नाम प्रथमो ऽध्यायः

## द्वितीयोऽध्यायः

चतुष्पाच्च धनुर्वेदो रक्तवर्णश्चतुर्मुखः
अष्टबाहुस्त्रिणेत्रश्च सांख्यायनसगोत्रवान् १
वज्रं खड्गो धनुश्चक्रं दक्षबाहुचतुष्टये
शतघ्नी च गदाशूलपट्टिशा वामबाहुषु २
प्रयोगकोटीरयुतो नीत्यंगो मंत्रकंचुकः
उपसंहारहृदयो शस्त्रास्त्रोभयकुण्डलः ३
अनेकवल्गिताकारभूषणः पिंगलेक्षणः
जयमालापरिवृतो वृषारूढस्स उच्यते ४
एतन्मंत्रं प्रवक्ष्यामि वैरिजालनिकृन्तनं
आत्मसैन्यस्वपक्षाणामात्मनश्चाभिरक्षकं ५
आदौ प्रणवमुच्चार्य नम इत्यक्षरे ततः

वतेति भगपूर्वं धं धनुर्वेदाय चोच्चरेत् ६
मां रक्ष रक्षेत्युच्चार्य मम शत्रूनथो वदेत्
भक्षयेति द्विरुच्चार्य हुं फट् स्वाहेत्यथोच्चरेत् ७
अहमेव ऋषिश्चास्य गायत्री छन्द उच्यते
महेश्वरो देवतास्य विनियोगोऽरिनिग्रहे ८
द्वात्रिंशद्वर्णकमनुं वर्णसंख्यासहस्रकैः
जपित्वा सिद्धिमाप्नोति रिपूंश्चाप्यधितिष्ठति ९
सत्यं सत्यं पुनस्सत्यं त्रिर्वदामीह वेनज
धनुर्वेदस्य विवृतिमथाख्यास्ये निबोध मे १०
मुक्तं चैव ह्यमुक्तं च मुक्तामुक्तमतः परं
मंत्रमुक्तं च चत्वारि धनुर्वेदपदानि वै ११
मुक्तं बाणादि विज्ञेयं खड्गादिकममुक्तकं
सोपसंहारमस्त्रं तु मुक्तामुक्तमुदाहृतं १२
उपसंहाररहितं मंत्रमुक्तमिहोच्यते
चतुर्भिरेभिः पादैस्तु धनुर्वेदः प्रकाशते १३
शस्त्रमस्त्रं च प्रत्यस्त्रं परमास्त्रमितीव च
चातुर्विध्यं धनुर्वेदे केचिदाहुर्धनुर्विदः १४
आदानं चैव संधानं विमोक्षस्संहृतिस्तथा
धनुर्वेदश्चतुर्धेति वदन्तीति परे जगुः १५
तत्राद्यं मतमालम्ब्य मुक्तामुक्तायुधान्यहं
द्वात्रिंशद्भेदतो वच्मि तत्रायं विस्तृतिक्रमः १६
धनुरिषुर्भिण्डिवालश्शक्तिद्रुघणतोमराः
नलिका लगुडः पाशश्चक्रं वै दंतकंटकः १७
मुसुंडीति द्वादशैते मुक्तभेदाः प्रकीर्तिताः
धनुर्वेदस्याद्यपादस्तवायं कथितो नृप १८
वज्रमीली च परशुर्गोशीर्षमसिधेनुका

लवित्रमास्तरः कुंतस्स्थूणः प्रासः पिनाककः १९
गदा मुद्गरसीराश्च मुसलः पट्टिशं तथा
मौष्टिकं परिधश्चैव मयूखी च शतघ्निका २०
अमुक्ता विंशतिरिमे द्वितीयः पाद उच्यते
मुक्तामुक्तानि शस्त्राणि द्वात्रिंशद्गणितानि ते २१
दंडचक्रं धर्मचक्रं कालचक्रं तथैव च
ऐन्द्रं चक्रं शूलवतं ब्रह्मशीर्षं च मोदकी २२
शिखरी धर्मपाशं च तथा वरुणपाशकं
पैनाकास्त्रं च वायव्यं शुष्कार्द्रे शिखरास्त्रकं २३
क्रौञ्चास्त्रं हयशीर्षं च विद्याविद्येऽस्त्रसंज्ञिके
गांधर्वास्त्रं नन्दनास्त्रं वर्षणं शोषणं तथा २४
प्रस्वापनप्रशमने संतापनविलापने
मदनं मानवास्त्रं च नामनं तामसं तथा २५
संवर्तं मौसलं सत्यं सौरं मायास्त्रमेव च
त्वाष्ट्रमस्त्रं च सोमास्त्रं संहारं मानसं तथा २६
नागास्त्रं गारुडास्त्रं च शैवेषीकेऽस्त्रसंज्ञिके
चतुश्चत्वारि चैतानि सोपसंहारकाणि वै २७
वक्ष्यामि चोपसंहारान् क्रमप्राप्तान् निबोध मे
याञ्ज्ञात्वा वैरिमुक्तानि चास्त्राणि शमयिष्यसि २८
सत्यवान् सत्यकीर्तिश्च रभसो दृष्ट एव च
प्रतिहारतरश्चैवाप्यवाङ्मुखपराङ्मुखौ २९
दृढनाभोऽलक्ष्यलक्ष्यावाविलश्च सुनाभकः
दशाक्षश्शतवक्त्रश्च दशशीर्षशतोदरौ ३०
धर्मनाभो महानाभो दुंधुनाभस्तु नाभकः
ज्योतिषविमलकुलश्चैव नैरास्यकृशनावुभौ ३१
योगंधरस्सनिद्रश्च दैत्यः प्रमथनस्तथा

सार्चिर्माली धृतिर्माली वृत्तिमान् रुचिरस्तथा ३२
पित्र्यस्सौमनसश्चैव विधूतमकरौ तथा
करवीरो धनरती धान्यं वै कामरूपकः ३३
जृंभका वरणाश्चैव मोहः कामरुचिस्तथा
वरुणस्सर्वदमनस्संधानस्सर्वनाभकः ३४
कंकालास्त्रं मौसलास्त्रं कापालास्त्रं च कंकणं
पैशाचास्त्रं चेति पंचाप्यसुरास्त्राणि भूपते ३५
सत्यवान् सर्वदमनः कामरूपस्तथैव च
योगंधरोऽप्यलक्ष्यश्चाप्यसुरास्त्रविघातकाः ३६
चतुश्चत्वारिंशदेते पञ्चान्येऽन्यविमर्दनाः
मेलयित्वा च पंचाशदेकोना ह्यस्त्रनामकाः ३७
सर्वमोचननामा तु सुप्रभातनयो महान्
मुक्तामुक्ताखिलशमो मद्वरात्प्रथितः परः ३८
अयं तृतीयपादस्स्याद्धनुर्वेदस्य भूपते
मन्त्रमुक्तं चापि वक्ष्ये सावधानमनाश्शृणु ३९
विष्णुचक्रं वज्रमस्त्रं ब्रह्मास्त्रं कालपाशकं
नारायणं पाशुपतं नाशाम्यमितरास्त्रकैः ४०
स्वान्यसंहारकाभावान्मंत्रमुक्तान्यमूनि षट्
अयं चतुर्थपादस्स्याद्धनुर्वेदस्य संमतः ४१
शृणु चाप्यपरं भूयो विशेषं वच्मि तेऽनघ
पुरा दैवासुरे युद्धे निर्जिता दानवैस्सुराः ४२
धनुर्वेदाविशेषज्ञाः पलायनपरायणाः
दधीचिमृषिमालोक्य तस्मै दत्वायुधानि ते ४३
मन्दरं पर्वतश्रेष्ठं वस्तुकामा द्रुतं ययुः
ते तत्रोषुर्बहूनब्दानिन्द्रमुख्या भयात् सुराः ४४
दधीचिरपि तान् हत्वा दैतेयेभ्यो ह्यरक्षत

शल्यभूतानि तस्यर्षेरायुधानि तपोबलात् ४५
अथ मां शरणं प्राप्ता देवास्सेन्द्रपुरोगमाः
पराजिता विलीनाश्च मंदरे भयविह्वलाः ४६
अथाददां धनुर्वेदं देवेभ्यस्सरहस्यकं
चतुष्पादयुतं सांगं तेषामनुजिघृक्षया ४७
अथ लब्धवरा मत्तो योद्धुं दैतेयसत्तमान्
दधीचिं प्रस्थिता दृष्ट्वा तान्ययाचन्त संगताः ४८
आयुधापेक्षिणां श्रुत्वा वचनमृषिसत्तमः
शल्यभूतानि संचिंत्य कृपार्द्रो तानथाब्रवीत् ४९
साधनान्यस्थिभूतानि मम देहे दिवौकसः
गोजिह्वया लेहयित्वा विंशसित्वायुधानि वः ५०
मदंगात् तान्युपादाय जयध्वं युधि शात्रवान्
मम चैवं वधो दृष्टो नात्र कार्या विचारणा ५१
देवोपयोगिनं देहमिमं कृत्वा दिवं व्रजे
यूयं स्वकार्यं संसाद्य मम लोकान् प्रयच्छत ५२
ते तस्य वचनं श्रुत्वा तथा चक्रुर्दिवौकसः
आत्मकार्यगरीयस्त्वात् तत्कार्यं प्रतिपेदिरे ५३
गोमुखं ब्रह्महत्यापि विवेश नृपसत्तम
देवसन्तोषणाल्लोकाञ्छाश्वतान् स ऋषिर्ययौ ५४
तदाप्रभृति लोका वै न पश्यन्तीह गोमुखं
प्रातः पुरुषशार्दूल तद्दोषगतमानसाः ५५
एकत्रिंशच्च कंकालास्सा चैका च कशेरुका
द्वात्रिंशन्निर्गता देहात्तस्यर्षेस्सुमहात्मनः ५६
यद्यदंगाश्रितं चास्थि यद्यद्रूपमगान्मुनेः
तत्तदस्थ्युद्गतं शस्त्रं तत्तदाकारकं ह्यभूत् ५७
तीक्ष्णस्वभावाद्दर्वाच्च दधीचिमुपताप्य तु

तद्रक्षितान्यायुधानि तेन शल्यीकृतानि वै ५८
शस्त्राणि लोके द्वात्रिंशत् प्रचरिष्यन्ति पार्थिव
कशेरुकोद्गतं वज्रमिन्द्रहस्तगतं विना ५९
धनुर्वेदस्य माहात्म्यान्निर्जिता दानवास्सुरैः
भूलोके त्वावधिं कृत्वा धनुरादि चरिष्यति ६०
धनुर्वेदविदं त्वां तु समाश्रित्य नृपोत्तमाः
नीतिमन्तो भविष्यन्ति मत्प्रसादान्न संशयः ६१
इत्येतत्कथितं वत्स माहात्म्यं वेदसंमितं
शस्त्रोत्पत्तिश्च कथिता किं भूयश्श्रोतुमिच्छसि ६२
धनुर्वेदस्योपदेशमिमं योऽधिगमिष्यति
त्वत्कृते मत्कृतं सोऽथ सर्वान् कामानवाप्नुयात् ६३
पारीक्षित महाबुद्धिः पृथुश्श्रुत्वा विधेर्वचः
हृदयस्थं ततो भावं द्रष्टुं समुपचक्रमे ६४
इति श्रीमन्नीतिशास्त्रे नीतिप्रकाशिकायां
धनुर्वेदविवेककथनं नाम द्वितीयोऽध्यायः

## तृतीयोऽध्यायः

लोकनाथ नमस्तेऽस्तु सर्वाश्चर्याश्रय प्रभो
उत्पादितो मया खड्गः पूर्वमित्युदितं त्वया १
खड्गः कदा हि जनितस्त्वया केनेह हेतुना
कस्त्वत्सकाशात्प्रथममग्रहीदसिमुत्तमं २
परंपरा तु का तस्य भूलोकप्रापणी विभो
पूर्वाचार्यं च खड्गस्य मम ब्रूहि पितामह ३
स तद्वचस्समाकर्ण्य प्रोवाचेदं पितामहः
यत्र येन निमित्तेन यथासौ जनितः पुरा ४
वेनपुत्र प्रवक्ष्यामि खड्गसंभवमुत्तमं

सावधानमनाश्श्रुत्वा सर्वत्र जयमाप्स्यसि ५
विशीर्णे कार्मुके राजन् प्रक्षीणेषु च वाजिषु
खड्गेन शक्यते युद्धे साध्वात्मा परिरक्षितुं ६
शरासनधरांश्चैव गदाशक्तिधरांस्तथा
एकः खड्गधरो वीरस्समर्थः प्रतिबाधितुं ७
आयुधेभ्यो वरः खड्गस्तस्माल्लोकेषु विश्रुतः
मया सृष्टः पुरा राजन् कस्मिंश्चित् कारणांतरे ८
हिरण्यकशिपुश्चैव हिरण्याक्षो विरोचनः
शंबरो विप्रचित्तिश्च प्रह्लादो नमुचिर्बलिः ९
एतेचान्ये च बहवस्सगणा दैत्यदानवाः
धर्मसेतुमतिक्रम्य देवैर्योद्धुमुपाक्रमन् १०
तदा हिमवतश्शृंगे नानाधातुविराजिते
शतयोजनविस्तारे पुष्पितद्रुमकानने ११
यज्ञं ह्यकरवं तत्र सर्वलोकार्थसिद्धये
ततो वर्षसहस्रान्ते त्वद्भुतं समजायत १२
नभोऽग्निज्वालयोद्भास्य द्योतयञ्जगतीतलं
विकीर्याग्निं तथा भूतमुत्थितं चाग्निकुण्डतः १३
नीलोत्पलसवर्णं तत् तीक्ष्णदंष्ट्रं कृशोदरं
सुप्रांशु दुर्धर्षतरं ज्वालमालासमाकुलं १४
रक्ताक्षं क्रूरनिर्ह्रादं सर्वप्राणिभयंकरं
स्वतेजसातिरौद्रेण द्रष्टुर्दृष्टिविलोपकं १५
तस्मिन्नुत्पतमाने च प्रचंचाल वसुंधरा
महोर्मिकलिलावर्तश्चुक्षुभे स महोदधिः १६
पेतुरुल्का दिवो घोराश्शाखाश्च मुमुचुर्द्रुमाः
तद्दृष्ट्वा सर्वभूतानि प्राव्यधंत मुहुर्मुहुः १७
महर्षिसुरगंधर्वानब्रुवं भयविह्वलान्

मयैवं चिन्तितं भूतमसिर्नामैष वीर्यवान्  १८
रक्षणार्थाय लोकस्य वधाय च सुरद्विषां
तनस्तद्रूपमुत्सृज्य बभौ निस्त्रिंश एव सः  १९
विमलस्तीक्ष्णधारश्च कालान्तक इवोद्यतः
पञ्चाशदंगुल्युत्सेधश्चतुरंगुलिविस्तृतः  २०
ततस्त्वृषभकेतोस्स हस्ते दत्तो मया ह्यसिः
राक्षसान्तकरस्तीक्ष्णस्तदाधर्मनिवारकः  २१
तमुद्धृत्य महादेवस्सर्वशत्रुभयंकरं
त्रिकूटं चर्म चोद्यम्य सविद्युतमिवांबुदं  २२
चचार विविधान् मार्गान् महाबलपराक्रमः
छिन्दन् भिन्दन् रुजन् कृन्तन् दारयन् पोथयन्नरीन्  २३
द्वात्रिंशत् करणानि स्युर्यानि खड्गप्रयोधने
चित्रशीघ्रपदं तानि दैत्यसंघे ह्यदर्शयत्  २४
भ्रान्तमुद्भ्रान्तमाविद्धमाल्पुतं विल्पुतं सृतं
संयान्तं समुदीर्णं च निग्रहप्रग्रहौ तथा  २५
पादावकर्षसन्धाने शिरोभुजपरिभ्रमौ
पाशपादविबन्धाश्च भूम्युद्भ्रमणके तथा  २६
गतप्रत्यागताक्षेपाः पातनोत्थानके प्लुतं
लाघवं सौष्ठवं शोभा स्थिरत्वं दृढमुष्टिता  २७
तिर्यगूर्ध्वप्रचरणे द्वात्रिंशत् करणान्यहो
विजित्य दानवान् संख्ये हृष्टो रुद्रो बभूव ह  २८
ततस्तु भगवान् रुद्रो विष्णुं दृष्ट्वा समीपगं
सत्कृत्य धर्मगोप्तारमसिं तस्मै ददौ मुदा  २९
विष्णुर्मरीचये प्रादान्मरीचिर्भगवानपि
महर्षिभ्यो ददौ खड्गमृषभो वासवाय च  ३०
महेन्द्रो लोकपालेभ्यो लोकपाला ददुश्च तं

मनवे सूर्यपुत्राय ततस्ते तमथाब्रुवन् ३१
धर्मसेतुमतिक्रान्तान् लोके धर्मार्थकारणात्
असिना धर्मगर्भेण शिक्षयस्व प्रजापते ३२
स तथेति प्रतिश्रुत्य गृहीत्वा खड्गमुत्तमं
लोके प्रवर्तयामास राजधारामुखेन वै ३३
त्वमप्येतमसिं मत्तो गृहाण नृपसत्तम
पालयस्व च धर्मेण प्रजाः पुत्रानिवौरसान् ३४
कृत्तिकास्तस्य नक्षत्रमसेरग्निश्च देवता
रोहिणी गोत्रमप्यस्य रुद्रस्तस्याधिदैवतं ३५
असेरष्टौ हि नामानि रहस्यानि निबोध मे
असिर्विशसनः खड्गस्तीक्ष्णधर्मा दुरासदः ३६
श्रीगर्भो विजयश्चैव धर्ममालस्तथैव च
अग्र्यः प्रहरणानां च रुद्रेणैवं समीरितः ३७
असेश्च पूजा कर्तव्या सदा युद्धविशारदैः
जयं कीर्तिं लभंते ते येऽसिं संपूजयन्ति वै ३८
कथेयं कथिता तुभ्यं खड्गमाहात्म्यसंयुता
न कस्यचिन्मया प्रोक्ता किं भूयश्श्रोतुमिच्छसि ३९
जिगीषवोऽरीन् राजानस्त्वभिषेणनकौतुकाः
ये पठेयुरिमं जय्यं जयं युद्धे लभंति ते ४०

इति श्रीमन्नीतिशास्त्रे नीतिप्रकाशिकायां
खड्गोत्पत्तिकथनं नाम तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

स्वयंभोर्वचनं श्रुत्वा पृथुः परमहर्षितः
प्रश्रयावनतो भूत्वा भूयः पप्रच्छ चाब्जजं १
द्वात्रिंशदायुधानीति मुक्तामुक्तोदितानि मे

तेषां स्वरूपं वर्णं च प्रयोगान् वक्तुमर्हसि २
इति पृष्टस्तु पृथुना भगवान् भक्तवत्सलः
तत्सर्वं कथयामास तस्य विस्तारयन् यशः ३
यस्य देवस्य यद्रूपं यो वर्णो यश्च यादृशः
आयुधस्याथ तन्नाम्नस्तानवेहि महामते ४
पूर्वं वक्ष्यामि मुक्तानां संस्थानानि निबोध मे
विदित्वा कारयन्नेवमायुधानां प्रकल्पनं ५
धनुस्स्वरूपमाख्यास्ये प्रथमं नृप सत्तम
तत्प्रमाणं च संस्थानं तस्याभ्यासक्रमं तथा ६
तत्रावान्तरभेदांश्च शराभ्यासक्रमं तथा
लस्तकग्रहणं चापि लक्ष्यभेदं चतुर्विधं ७
पृथुग्रीवं सूक्ष्मशिरस्तनुमध्यं सुपृष्ठवत्
चतुष्किष्कुप्रांशुदेहं त्रिणतं दीर्घजिह्वकं ८
दंष्ट्राकरालवदनं रक्ताभं घर्घरस्वनं
आंत्रमालापरिक्षिप्तं लेलिहानं च सृक्वणी ९
जयायां च कृशाश्वाद्यज्ञातं वै लोकरक्षणे
तद्ध्यात्वा मनसा सम्यग्गुरुं नत्वा विधानतः १०
धनुर्वेदविधानेन नास्य वामकरेण तत्
दक्षिणेन ज्यया योज्य पृष्ठे मध्ये प्रगृह्य तत् ११
वामांगुष्ठं तदुदरे पृष्ठे तु चतुरंगुलीः
पुंखमध्ये ज्यया योज्य स्वांगुलीविवरेण तु १२
आकर्णं तु समाकृष्य दृष्टिं लक्ष्ये निवेश्य च
लक्ष्यादन्यदपश्यंस्तु कृतपुंखः प्रयोगवित् १३
यदा मुंचेच्छरं विध्येत्कृतहस्तस्तदोच्यते
एवं बाणाः प्रयोक्तव्या ह्यात्मा रक्ष्यः प्रयत्नतः १४
अविचाल्यं च सूक्ष्मं च सुकुमारमथो गुरु

चातुर्विध्यं च लक्ष्यस्य धनुर्वेदविदो विदुः १५
भूभृद्भेदश्चाविचाल्यं सूक्ष्मं गुंजादिभेदनं
कुक्कुटांडोदकुंभानां भेदनं सुकुमारकं १६
रक्षोगजादिदेहानां पातनं गुरु चोच्यते
एवं च लक्ष्यविवृतिर्विज्ञेया नीतिमत्तरैः १७
लक्ष्यस्य प्रतिसंधानमाकर्षणविकर्षणे
पर्याकर्षानुकर्षा च मण्डलीकरणं तथा १८
पूरणं स्थारणं चैव धूननं भ्रामणं तथा
आसन्नदूरपातौ च पृष्ठमध्यमपातने १९
एतानि वल्गितान्याहुश्चतुर्दश धनुर्विदः
धनुर्भेदान्प्रवक्ष्यामि तत्तत्कार्यानुसारतः २०
शार्ङ्गिकं त्रिणतं प्रोक्तं वैणवं सर्वनामितं
वैतस्तिकधनुश्शंस्त्रं वैणवं तद्धि हस्तकं २१
उपलोत्क्षेपकं चापं वैणवं तद्विरज्जुकं
त्रिहस्तोत्सेधसहितं द्व्यंगुलीविस्तृतं तु तत् २२
बद्धगोधांगुलित्राणः पृष्ठबुद्धेषुधिस्सदा
योग्यां कुर्यादन्यथा स्यादपराद्धपृषत्ककः २३
प्रत्यालीढकमालीढं तथा समपदं स्मृतं
विशालं मंडलं चेति पञ्च धानुष्कवृत्तयः २४
गोधोपासंगकवचशिरस्त्राणपरीकराः
गलपट्टिसंग्रहश्च रथिनस्साधनानि वै २५
प्रदक्षिणं च शैघ्र्यं चाप्यप्रदक्षिणमेव च
गतं प्रत्यागतं चैव मंडलं चाप्यवस्थितिः २६
मिश्रणं स्फोटनं वीधी रथमार्गास्स्मृता दश
धनुर्विद्यां विदित्वैवं निर्दयस्तरणो भवेत् २७
इषुर्नीलबृहद्देहो द्विहस्तोत्सेधसंयुतः

परिध्या चाञ्जलिमितो नल्वमात्रगतिस्तु सः २८
भ्रामणं क्षेपणं चेति द्वे गती स्थूलसन्नते
इमे गतीभगो ज्ञात्वा युध्वारीन् विजयेद्युधि २९
भिण्डवालस्तु वक्रांगो नम्रशीर्षो बृहच्छिराः
हस्तमात्रोत्सेधयुक्तः करसंमितमण्डलः ३०
त्रिभ्रामणं विसर्गश्च वामपादपुरस्सरं
पादघाताद्रिपुहणो धार्यः पादातमण्डलैः ३१
शक्तिर्हस्तद्वयोत्सेधा तिर्यग्गतिरनाकुला
तीक्ष्णजिह्वोग्रनखरा घण्टानादभयंकरी ३२
व्यादितास्यातिनीला च शत्रुशोणितरंजिता
आन्त्रमालापरिक्षिप्ता सिंहास्या घोरदर्शना ३३
बृहत्त्सरुर्दूरगमा पर्वतेन्द्रविदारिणी
भुजद्वयप्रेरणीया युद्धे जयविधायिनी ३४
तोलनं भ्रामणं चैव वल्गनं नामनं तथा
मोचनं भेदनं चेति षण्मार्गाश्शक्तिसंश्रिताः ३५
द्रुघणस्त्वायसांगस्स्याद्वक्रग्रीवो बृहच्छिराः
पंचाशदंगुल्युत्सेधो मुष्टिसंमितमण्डलः ३६
उन्नामनं प्रपातश्च स्फोटनं दारणं तथा
चत्वार्येतानि द्रुघणे वल्गितानि श्रितानि वै ३७
तोमरः काष्ठकायस्स्याल्लोहशीर्षस्सुगुच्छवान्
हस्तत्रयोन्नतांगश्च रक्तवर्णस्त्ववक्रगः ३८
उद्धानं विनिवृत्तिश्च वेधनं चेति तत्त्रिकं
वल्गितं शस्त्रतत्त्वज्ञाः कथयंति नराधिपाः ३९
नलिका ऋजुदेहा स्यात् तन्वंगी मध्यरन्ध्रिका
मर्मच्छेदकरी नीला द्रौणिचापशरैरिणी ४०
ग्रहणं ध्मापनं चैव स्यूतं चेति गतित्रयं

तामाश्रितं विदित्वा तु जेतासन्नान् रिपून् युधि ४१
लगुडस्सूक्ष्मपादस्स्यात् पृथ्वंसस्स्थूलशीर्षकः
लोहबद्धाग्रभागश्च ह्रस्वदेहस्सुपीवरः ४२
दंतकायो दृढांगश्च तथा हस्तद्वयोन्नतः
उत्थानं पतनं चैव पेषणं पोथनं तथा ४३
चतस्रो गतयस्तस्य पञ्चमी नेह विद्यते
दृढकायः पत्तिवर्गो तेन युध्येत शत्रुभिः ४४
पाशस्सुसूक्ष्मावयवो लोहधातुस्त्रिकोणवान्
प्रादेशपरिधिस्सीसगुलिकाभरणांचितः ४५
प्रसारणं वेष्टनं च कर्तनं चेति ते त्रयः
योगाः पाशाश्रिता लोके पाशाः क्षुद्रसमाश्रिताः ४६
चक्रं तु कुण्डलाकारमन्ते स्वश्रसमन्वितं
नीलीसलिलवर्णं तत् प्रादेशद्वयमण्डलं ४७
ग्रंथनं भ्रामणं चैव क्षेपणं परिकर्तनं
दलनं चेति पंचैव गतयश्चक्रसंश्रिताः ४८
दन्तकंटकनामा तु लोहकंटकदेहवान्
अग्रे पृथुस्सूक्ष्मपुच्छश्चांगारसनिभाकृतिः ४९
बाहून्नतस्सुत्सरुश्च दंडकायोग्रलोचनः
पातनं ग्रन्थनं चेति द्वे गती दन्तकंटके ५०
बृसुण्डी तु बृहद्ग्रन्थिर्बृहद्देहस्सुसत्सरुः
बाहुत्रयसमुत्सेधः कृष्णसर्पोग्रवर्णवान् ५१
यापनं घूर्णनं चेति द्वे गती तत्समाश्रिते
मुक्ता ह्येते समाख्याता नृपामुक्तानथो शृणु ५२

इति श्रीमन्नीतिशास्त्रे नीतिप्रकाशिकायां
मुक्तायुधनिरूपणं नाम चतुर्थोऽध्यायः

## पञ्चमोऽध्यायः

अमुक्तप्रथमं वज्रं वक्ष्यामि तव तच्छृणु
अप्रमेयबलं वज्रं कामरूपधरं च तत् १
दधीचिपृष्ठास्थिजन्यं सर्वतेजःप्रशामकं
वृत्रासुरनिपातार्थं दैवतेजोपबृंहितं २
कोटिसूर्यप्रतीकाशं प्रलयानलसन्निमं
योजनोत्सेधदंष्ट्राभिर्जिह्वया चातिघोरया ३
कालरात्रिनिकाशं तच्छतपर्वसमावृतं
पञ्चयोजनविस्तारमुन्नतं दशयोजनं ४
असिमण्डलसंवीतं परितस्तीक्ष्णकोटिमत्
तटिद्गौरं च पृथुना त्सरुणा च विराजितं ५
चालनं धूननं चैव छेदनं भेदनं तथा
वल्गितानि च चत्वारि सदा वज्रं श्रितानि वै ६
ईली हस्तद्वयोत्सेधा करत्ररहितत्सरुः
श्यामा भुग्नाग्रफलका पंचांगुलिसुविस्तृता ७
संपातं समुदीर्णं च निग्रहप्रग्रहौ तथा
इलीमेतानि चत्वारि वल्गितानि श्रितानि वै ८
परशुस्सूक्ष्मयष्टिस्स्याद्विशालास्यः पुरोमुखः
अर्धचंद्राग्रकोटिस्तु मलिनाङ्गस्स्फुरन्मुखः ९
त्सरुपादस्सशिखरो बाहुमात्रोन्नताकृतिः
पातनं छेदनं चेति गुणौ परशुमाश्रितौ १०
गोशीर्षं गोशिरःप्रख्यं प्रसारितपदद्वयं
अधस्ताद्दारुयन्त्राढ्यमूर्ध्वायःफलकांचितं ११
नीललोहितवर्णं तत्त्रिरश्नि च सुसत्त्सरु
षोडशांगुल्युन्नतं च तीक्ष्णाग्रं पृथुमध्यकं १२
सत्कृत्य मनवे दत्तं महेन्द्रेण समुद्रिकं

प्रभुत्वसूचके लोके राज्ञां गोशीर्षमुद्रिके १३
मुष्टिग्रहः परिक्षेपः परिधिः परिकुन्तनं
चत्वार्येतानि गोशीर्षे वल्गितानि प्रचक्षते १४
असिर्धेनुस्समाख्याता हस्तौन्नत्यप्रमाणतः
अतलत्रत्सरुयुता श्यामा कोटित्रयाश्रिता १५
अंगुलिद्वयविस्तीर्णा ह्यासन्नरिपुघातिनी
मेखलाग्रथिनी सा तु प्रोच्यते खड्गपुत्रिका १६
मुष्ट्यग्रग्रहणं चैव पाटनं कुंतनं तथा
वल्गितत्रयवत्येषा सदा धार्या नृपोत्तमैः १७
लवित्रं भुग्नकायं स्यात् पृष्ठे गुरु पुरश्शितं
श्यामं पंचांगुलिव्यामं सार्धहस्तसमुन्नतं १८
त्सरुणा गुरुणा नद्धं महिषादिनिकर्तनं
बाहुद्वयोद्यमक्षेपौ लवित्रे वल्गिते मते १९
आस्तरो ग्रंथिपादस्स्याद्दीर्घमौलिर्बृहत्करः
भुग्नहस्तोदरशिरश्श्यामवर्णो द्विहस्तकः २०
भ्रामणं कर्षणं चैव त्रोटनं तत् त्रिवल्गितं
ज्ञात्वा शत्रून् रणे हन्याद्धार्यस्सादिपदातिकैः २१
कुंन्तस्त्वयोमयांगस्स्यात् तीक्ष्णशृङ्गष्षडश्रिमान्
पंचहस्तसमुत्सेधो वृत्तपादो भयंकरः २२
उड्डीनमवडीनं च निडीनं भूमिलीनकं
तिर्यग्लीनं निखातं च षण्मार्गाः कुन्तमाश्रिताः २३
स्थूणस्तु रक्तदेहस्स्यात् समीपदृढपर्वकः
पुंप्रमाण ऋजुस्तस्मिन् भ्रमणं पातनं द्वयं २४
प्रासस्तु सप्तहस्तस्स्यादौन्नत्येन तु वैणवः
लोहशीर्षस्तीक्ष्णपादः कौशेयस्तबकांचितः २५
आकर्षश्च विकर्षाश्च धूननं वेधनं तथा

चतस्त्र एता गतयो रक्तप्रासं समाश्रिताः २६
पिनाकस्तु त्रिशीर्षस्स्यात् सिताग्रः क्रूरलोचनः
कांस्यकायो लोहशीर्षश्चतुर्हस्तप्रमाणवान् २७
ऋृक्षरोमस्तबकभ्फल्लिवलयग्रीवदेहवान्
धूननं प्रोतनं चेति त्रिशूलं द्वे श्रिते गती २८
गदा शैक्यायसमयी शतारपृथुशीर्षका
शंकुप्रावरणा घोरा चतुर्हस्तसमुन्नता २९
रथाक्षमात्रकाया च किरीटांचितमस्तका
सुवर्णमेखलागुप्ता गजपर्वतभेदिनी ३०
मण्डलानि विचित्राणि गतप्रत्यागतानि च
अस्त्रयन्त्राणि चित्राणि स्थानानि विविधानि च ३१
परिमोक्षं प्रहाराणां वर्जनं परिधावनं
अभिद्रवणमाक्षेपमवस्थानं सविग्रहं ३२
परावृत्तं सन्निवृत्तमवप्लुतमुपप्लुतं
दक्षिणं मण्डलं चैव सव्यं मण्डलमेव च ३३
आविद्धं च प्रविद्धं च स्फोटनं ज्वालनं तथा
उपन्यस्तमपन्यस्तं गदामार्गाश्च विंशतिः ३४
मुद्गरस्सृक्ष्मपादस्स्याद्धीनशीर्षस्त्रिहस्तवान्
मधुवर्णः पृथुस्कंधश्चाष्टभारगुरुश्च सः ३५
सत्सरुर्वर्तुलो नीलः परिध्या करसंमितः
भ्रमणं पातनं चेति द्विविधं मुद्गरे श्रितं ३६
सीरो द्विवक्रो विशिखो लोहपादमुखः कृषन्
पुंप्रमाणस्स्निग्धवर्णस्स्वाकर्षविनिपातवान् ३७
मुसलस्त्वक्षिशीर्षाभ्यां करैः पादैर्विवर्जितः
मूले चान्तेऽतिसंबन्धः पातनं पोथनं द्वयं ३८
पट्टिशः पुंप्रमाणस्स्याद्द्विधारस्तीक्ष्णशृङ्गकः

हस्तत्राणसमायुक्तमुष्टिः खड्गसहोदरः ३९
मौष्टिकं सुत्सरु ज्ञेयं प्रादेशोन्नति भूषितं
शिताग्रमुन्नतग्रीवं पृथूदरसितं तथा ४०
मण्डलानि विचित्राणि स्थानानि विविधानि च
गोमूत्रकाणि चित्राणि गतप्रत्यागतानि च ४१
तिरश्चीनगतान्येव तथा वक्रगतानि च
परिमोक्षं प्रहाराणां वर्जनं परिधावनं ४२
अभिद्रवणमाप्लावमधस्स्थानं सविग्रहं
परावृत्तमपावृत्तमुपद्रुतमपद्रुतं ४३
उपन्यस्तमपन्यस्तमागतं स्फालनं तथा
एतानि वल्गितान्याहुर्मौष्टिके नृपसत्तम ४४
परिघो वर्तुलाकारस्तालमात्रस्सुतारवः
बलैकसाध्यसंपातस्तस्मिञ्ज्ञेयो विचक्षणैः ४५
मयूखी कृतयष्टिस्स्यान्मुष्टियुक्ता नरोन्नता
किंकिणीसंवृता चित्रा फलिकासहचारिणी ४६
आघातं च प्रतीघातं विघातं परिमोचनं
अभिद्रवणमित्येते मयूखीं पञ्च संश्रिताः ४७
शतघ्नी कंटकयुता कालायसमयी दृढा
मुद्गराभा चतुर्हस्ता वर्तुला त्सरुणा युता ४८
गदावल्गितवत्येषा मयेति कथिता तव
अमून्यमुक्तायुधानि विंशतिर्नृपसत्तम ४९
मुक्तामुक्तपदोक्तानि द्वात्रिंशदिति निर्णयः
ब्रह्मणा निर्मितः खड्गः पृथक् ते परिकीर्तितः ५०
एतानि विकृतिं यान्ति युगपर्यायतो नृप
देहदार्ढ्यानुसारेण तथा युगपर्यायतो नृप
देहदार्ढ्यानुसारेण तथा बुद्ध्यनुसारतः ५१

यंत्राणि लोहसीसानां गुलिकाक्षेपकाणि च
तथा चोपलयंत्राणि कृत्रिमाण्यपराणि च  ५२
कूटयुद्धसहायानि भविष्यंति कलौ नृप
तप्ततैलं सर्जरसो गुडलालोग्रवालुका  ५३
मधुसाशीविषघटाश्शीलकानि बृहच्छिलाः
क्रकचा धूमगुलिकास्तुषांगारादिकं तथा  ५४
अधर्मवृद्ध्या चैतानि भविष्यंत्युत्तरोत्तरं
साधनानि महीपाल कूटयुद्धाभिकांक्षिणां  ५५
हूणाः पुलिंदाश्शबरा बर्बराः पप्लवाश्शकाः
मालवाः कोंकणा ह्यान्ध्राश्चोलाः पाण्ड्यास्सकेरलाः  ५६
म्लेच्छा गोयोनयश्चान्ये चण्डालाश्श्वपचाः खलाः
मावेल्लका ललित्थाश्च किराताः कुक्कुरास्तथा  ५७
पापा ह्येते कथं धर्मं वेत्स्यन्ति च वियोनयः
सांकर्यदोषनिरता भविष्यन्त्यधमे युगे  ५८
इत्येतत् कथितं वत्स मया लोकहितैषिणे
तुभ्यं शुश्रूषवे धर्मान् किं भूयः कथयाम्यहं  ५९

इति श्रीमन्नीतिशास्त्रे नीतिप्रकाशिकायां
अमुक्तायुधनिरूपणं नाम पञ्चमोऽध्यायः

षष्ठोऽध्यायः

अथ व्यूहान् प्रवक्ष्यामि शत्रुसैन्यप्रमर्दनान्
बलांगासंकुलार्थाय शत्रुसंमोहनाय च  १
स्वशक्त्युपचयं ज्ञात्वा रिपुव्यसनमेव च
शत्रोस्त्रिगुणसैन्येन व्यूह्य सेनामरिं व्रजेत्  २
दंडो भोगोऽसंहतश्च मंडलव्यूह एव च
व्यूहाश्चत्वार एवैते तेषु भेदान् ब्रवीम्यहं  ३

प्रदरो दृढकस्सत्यश्चापभूस्वक्षिरेव च
सुप्रतिष्टोऽप्रतिष्ठश्च श्येनो विजयसंजयौ ४
विशालो विजयस्सूची स्थूणोऽकर्णश्चमूमुखः
सुखास्यो विजयश्चेति दंडस्सप्तदशात्मकः ५
गोमूत्रिका हंसिका च संचारी शकटस्तथा
एवं करपतन्तीति भोगभेदास्तु पंच वै ६
अर्धचन्द्रकटद्धारो वज्रो शर्कटकस्तथा
शृंगी च काकपादी च गोधिकेत्यपरस्स्मृतः ७
असंहतष्षड्विधस्स्यादित्याहुर्व्यूहकोविदाः
सर्वभद्रो दुर्जयश्च मंडलोऽपि द्विधा इति ८
वाराही मकरव्यूहो गारुडः क्रौञ्च एव च
पद्माद्याश्चांगवैकल्यादेतेभ्यस्ते पृथक्स्मृताः ९
रक्षोदेवमनुष्याणां बुद्धिवैचित्र्यनिर्मिताः
व्यूहास्सहस्रशो राजन्निति ज्ञेया मनीषिभिः १०
उरः कक्षौ च पक्षौ च मध्यं पृष्ठः प्रतिग्रहः
कोटी च व्यूहशास्त्रज्ञैस्सप्तांगो व्यूह उच्यते ११
अग्रे नागान् रथान् पश्चात्पार्श्वयोस्तुरगान्नृपः
पदातीन् पृष्ठतो व्यूहे चारयन्विजयी भवेत् १२
तत्तत्कार्यानुसारेण रथान् नागांस्तुरंगमान्
नरानश्वान्रथान्नागान्नरानश्वान्रथांस्तथा १३
गजांश्चाग्रे प्रेषयेच्च योजयित्वा यथाक्रमं
देशकालौ निरीक्ष्यैव परिवारसमन्वितान् १४
सर्वाभिसारसहितो यात्रोद्युक्तो नृपोत्तमः
प्रचक्रममथो दृष्ट्वा प्रसारे विनियोजयेत् १५
अभिषेणनमन्विच्छन्नभिक्रममथाचरेत् १५
संग्राहिणः कौक्षिकांश्च जंघालानंनुकामिनान्

ऊर्जस्वलान्सांयुगीनान्सैन्यमध्ये प्रचारयेत् १६
बालान्पोतांश्च कलभान्विक्कांश्चैवोपवाह्यकान्
मदोत्कटांश्च कलभान् सान्नाह्यानेव कारयेत् १७
उद्वांतं हास्तिकं चापि घराटापथचरं भवेत् १८
वीतमंतःपुरं चैव पृष्ठ्यान्वै प्रातिवेश्यकान्
शाखानगरवासांश्च राजधानीवणिग्जनान् १९
सौविदल्लान् वर्षवरान्वृद्धान् बालांश्च रोगिणः
सन्नतानन्निरहितान् पंगून्व्यंगान्सुदुर्बलान् २०
तथा पुष्यरथांश्चैव भद्रासनयुतानपि
प्रक्रियानुप्लवांश्चैव युद्धोपकरणानि च २१
कोष्ठागारायुधागारयंत्रागाराणि यानि च
मंदरान्धान्यकोशं च यच्चान्यत्कृशदुर्बलं २२
प्रतिग्रहे वासयेच्च योधास्त्रंमर्दहेतवे
तस्य रक्षाञ्च विधिवच्छूरैः कुर्यान्नराधिपः २३
ऊर्जस्वलांश्च जंघालानाभ्यमित्रीयतस्तथा
आत्यंतिकान् स्पशान् दूतांश्चैत्रान् सांयुगिकांस्तथा २४
जैत्रध्वजपताकं च स्वगजं च महोन्नतं
नासीरे प्रेषयेदेतानुरस्वद्भिर्बलैस्सह २५
पुरोगानुचरांश्चैव साहायाभिचरांस्तथा
प्रष्ठांश्च जांघिकांश्चैव वेत्रिणोऽनुप्लवांस्तथा २६
असिचर्मधरांश्चैव शंसकान् मागधांस्तथा
स्वपुरश्चारयेद्राजा स्वसंरक्षणकारणात् २७
आजानेयांश्च जवनान्पृष्ठ्यान् रथ्यांश्च कर्कशान्
पृष्ठेऽश्वान् वासयेद्राजा सविधे व्यूहकंकटान् २८
आश्विनं वप्रसहितं सालं काष्ठविनिर्मितं
बृहत्कूटं सपरिखं धनधान्यायुधान्वितं २९

सकाण्डपृष्ठं सजलं सतुषांगारशिल्पिकं
समाश्रयेद्युध्यमानश्शत्रुभिर्नृपसत्तमः ३०
बहूदयान् प्रात्ययिकान् कृत्वान्तर्वंशिकान् नृपः
प्राज्ञान्मूलप्रतीकारान्वैरनिर्यातनं चरेत् ३१
मूलप्रतिग्रहं कृत्वा प्रत्यासारं प्रकल्प्य च
पौरश्रेणीस्स्वराष्ट्रं च पालयन् श्रितप्राभृतः ३२
सैनिकान् परिधिस्थांश्च स्थापयित्वा नृपोत्तमः
प्रस्थापयेन्मार्गकरान् पुरस्ताच्छिल्पिनो बहून् ३३
कर्मान्तिकान् यष्टिधरान् खनकान् तक्षकानपि
सूत्रिणो रोपकांश्चैव सेतुबन्धकरानपि ३४
तथा भूमिप्रदेशज्ञान्व्याधान्वनविशारदान्
विषमस्थं रिपुबलं ये विंद्युस्तान् बहुश्रुतान् ३५
प्रेषयित्वा नयेत् सेनां गुप्तिकर्म विधाय च
परिहृत्य श्मशानानि देवतायतनानि च ३६
आश्रमांश्च महर्षीणां तीर्थान्यायतनानि च
नाधितिष्ठेत् तुषाङ्गारभस्मकेशकपालिकाः ३७
मधुरानूषरे देशे शिवे पुण्ये जलावृते
निवेशं कारयेद्राजा सेनायास्तु स्ववृद्धये ३८
विद्रावयेच्छत्रुगुल्मांस्तथा चैकचराहितान्
परिक्रमेच्च सेनायां परितो योधसंवृतः ३९
दूष्याणि च नरेंद्राणां स्वयमेव विचारयन्
शत्रूद्योगविघातार्थं परितश्चारयेद्बलं ४०
गुप्तिकर्म समादिश्य चाराननुविधाय च
शिबिराणि महार्हाणि स्वयोधानां पृथक्पृथक् ४१
प्रभूतजलकाष्ठानि दुराधर्षतराणि च
भक्ष्यभोज्योपपन्नानि धनधान्ययुतानि च ४२

कृत्वा सुशिल्पिनः प्राज्ञाञ्शतशो दत्तवेतनान्
सर्वोपकरणैर्युक्तान् वैद्यांश्च सुविशारदान्  ४३
प्रदेयानि तु योधानां वस्त्राण्याभरणानि च
वित्तं बहु च संस्थाप्य निश्शंको योधयेदरीन्  ४४
गतवाहनयोधानां वाहनानि प्रकल्पयेत्
विशस्त्राणां च शस्त्राणि दापयेद्युधि भूमिपः  ४५
पल्याणानि खलीनानि पल्ययांकादिकानि च
प्रकीर्णकानि शीर्षण्यान्यथो कंकटकान्कुथाः  ४६
ज्याधनुर्वर्मशस्त्राणि चापानि यवसं बहु
महायन्त्राणि नाराचांस्तोमरांश्च परश्वधान्  ४७
रज्जूञ्शंकूञ्शंकुरोपान्लोहपादविबन्धनान्
दात्राणि च कुठारांश्च वाश्यांश्च छुरिका अपि  ४८
चक्राणि लोहपट्टांश्च क्रकचांश्चर्मभस्त्रिकाः
पिटकानि खनित्राणि सूचीश्च ग्रथनोचिताः  ४९
पृष्ठ्यान्वृषानश्वतरीनुष्ट्रान्वै दूरगामिनः
गजानां च हयानां च नराणामगदानि च  ५०
विविधानि च वाद्यानि तथा कैरातकं मधु
शाल्मलीतूलिकां चैवाप्यश्मसाराश्मसंयुतां  ५१
वराकीश्चैव तरुजाः कटाहाँल्लौहतांम्रकान्
आरकूटांश्च टंकांश्च शाणांश्च पृधनानपि  ५२
अरा उपानहश्चेहाप्यूरुत्राणि कशास्तथा
विश्वकर्डूंश्च वेणूंश्च वागुरा बडिशान्यपि  ५३
पतद्ग्राहान्गंधतैलं पीतिकादीनि यानि च
प्रास्थानिकानि सेनायास्तानि सुष्ठु प्रकल्पयेत्  ५४
योधेषु रथिकान् कुर्यादश्वपृष्ठविशारदान्
अश्वारूढांस्तथा कुर्याद्रथेषु परिनिष्ठितान्  ५५

उभौ तौ नृपतिः कुर्याद्गजपृष्ठसुयोधिनौ
तान् हि कुर्यात्पदातीन्वै पदातीनपि तादृशान् ५६
सारथ्ये च गजस्कंधे चक्ररक्षाविधौ तथा
अन्येषु वा साहसेषु तान्कुर्यान्निपुणान्नृपः ५७
द्वात्रिंशत्करणानि स्युर्युद्धे यानीह नीतितः
चतुरङ्गबलं सर्वं तेषु कुर्यात्सुनिष्ठितं ५८
प्रयाणपूर्वयायित्वं वनदुर्गप्रवेशनं
अकृतानां च मार्गाणां कृतानां च प्रवर्तनं ५९
बिभीषिकाविघातश्च तथा प्राकारभंजनं
कोशनीतिर्भयत्राणं भिन्नसंधानमेव च ६०
शत्रुपच्यश्वरोधश्च दुर्गे भारोद्वहस्तथा
वृक्षावभंजनं चैव हस्तिकर्म प्रचक्षते ६१
द्वितीयसैन्ययायित्वं गजसंरक्षणं तथा
भिन्नसंधानकारित्वं दूरे शत्रुनिवारणं ६२
शत्रूणामभिरोधश्च व्यूहद्वारे व्यवस्थितिः
महाघोषविधिश्चेति रथकर्म प्रचक्षते ६३
वनदिङ्मार्गविज्ञानं वीवधासाररक्षणं
प्रसास्करणं चापि हेषिताच्छत्रुभीषणं ६४
अनुयानापसरणे शीघ्रकार्योपपादनं
लुंठनं शत्रुसैन्यानामश्वकर्म प्रचक्षते ६५
शोधनं कूपतीर्थानां मार्गाणां शिबिरस्य च
स्कंधावारस्य करणं विष्टिकर्मप्रसाधनं ६६
कोशागारायुधागारधान्यागारादिरक्षणं
व्यूहप्राकारकरणं पत्तिकर्म प्रचक्षते ६७
अवृक्षस्थूलपापाणागुल्मवल्मीककण्टका
सापसारा पदातीनां भूर्नातिविषमा मता ६८

अपंका शंकुरहिता तथा पाषाणवर्जिता
खुराघातक्षमाभिन्ना समा भूर्वाजिनां मता ६९
अकेदाराकृतश्वभ्रा वृक्षगुल्मविवर्जिता
खुरचक्रसहा सौम्या रथभूस्संप्रकीर्तिता ७०
मर्दनीयतरुश्रेष्ठव्रततिः पंकवर्जिता
निर्दरा गम्यशैला च विषमा गजमेदिनी ७१
सर्वसेनाधिपः कार्यः कुलपुत्रो जितेन्द्रियः
दृष्टापदानो दक्षश्च रूपवान् राजवल्लभः ७२
लालाटिकश्चेंगितज्ञस्सेनानयविशारदः
धृष्टस्सांत्वयिता चैव स्वयोधानां रणाजिरे ७३
अक्षौहिणीनां पतयः पृथक्कार्यास्तथाविधाः
सेनापतिवशे तेऽपि तिष्ठेयुस्तेन पालिताः ७४
पत्तेस्सेनामुखस्यापि गुल्मस्य च गणस्य च
वाहिन्याः पृतनायाश्च चम्वाश्चाप्यधिपाः पृथक् ७५
अनीकिन्याश्च कार्या वै योधशिक्षासु निष्ठिताः
द्वयोस्त्रयाणां पतयः कार्याः कार्यानुसारतः ७६
दिवसे दिवसे संज्ञाः पृथक्कार्यास्स्वके बले
ता जानीयुस्सैन्यपाला न भटा नेतरे जनाः ७७
स्वाज्ञासंचरणार्थाय संचरेयुस्स्वचिह्निताः
शत्रूणामुपघातार्थं गुप्तिकर्म प्रचक्षते ७८
यादृक्सैन्याधिपत्ये तु पूर्वं योऽधिकृतो भवेत्
स ज्येष्ठभावे नियतस्तत्पाश्चात्यास्तु तद्वशे ७९
पच्याद्यङ्गपतीनष्टावक्षौहिण्यधिपानुगान्
कृत्वा ज्येष्ठानुसारेण नियम्यास्सर्वसैनिकाः ८०
राज्ञा नियमितांस्त्यक्त्वा तथासंज्ञोत्तरप्रदान्
हन्यान्निशिचरान्सैन्ये नृपाज्ञापरिपंथिनः ८१

अधिपाः प्रतिसेनायास्त्रयः कार्यास्सुशिक्षिताः
उत्तमाधममध्यस्था ज्येष्ठाज्ञावशवर्तिनः ८२
दिवसे दिवसे सेनां परिवर्त्य प्रचोदयेत्
एकत्र सुस्थितं सैन्यं शंकां स्वस्यापि साधयेत् ८३
यस्त्वमात्योऽनुकूलस्स्याद्राजकार्यधुरंधरः
सैन्यपालस्य तस्याज्ञां स्वयं राजा समाश्रयेत् ८४
समुत्पिंजे स्वसैन्ये च संशप्तैर्योधयेदरीन्
वीराशंसनके तिष्ठेद्विजिगीषुर्नृपस्स्वयं ८५
कान्दिशीके स्वसैन्ये तु मुण्डानीके वसेत् स्वयं
कृतलोहाभिसारस्सन् पश्चाद्गत्वा रिपूञ्जयेत् ८६
गव्यूतिमात्रे यो व्यूहो बृहत्सैन्यस्य निर्मितः
अच्छत्रचामरैश्शूरैर्मुण्डानीकं स चोच्यते ८७
प्रत्यग्रे कर्मणि कृते श्लाघमानः कृतादरः
योधेभ्यः पूर्णपात्रं हि दद्याद्राजा विशेषतः ८८
दद्यात्प्रहृष्टो नियुतं वर्वाणां राजघातिने
तदर्धं तत्सुतवधे सेनापतिवधे तथा ८९
अक्षौहिणीपतिवधे तदर्धं परिचक्षते
मंत्र्यमात्यवधे चैव तदर्धं तु प्रदापयेत् ९०
अनीकिनी चमूश्चैव पृतना वाहिनी गणः
गुल्मं सेनामुखं पत्तिरेतेषां पतिघातिने ९१
क्रमादर्धांशहासेन तत्तदर्धानि दापयेत्
वेतनादधिकं चैतत् प्राप्य कुर्युश्च साहसं ९२
अक्षौहिण्याः पतिं हत्वा द्वितीयं वा तृतीयकं
चम्वोरधिपतिं चैव पृतनानां पतिं तथा ९३
अनीकिनीपहा यावत्तावत्प्राप्नोति राजतः
इत्थमग्रेऽपि योक्तव्यं सन्मानमधिपापहे ९४

पलायितं सायुधं तु धृत्वा स्वभटदायिने
वर्वाणां पंच वै दद्यात् तस्मै सत्कृत्य भूमिपः ७५
पलायितं स्वभृतिकं विशस्त्रं देहलोभिनं
धृत्वा निवेदिने दद्याद्वर्वाणां च त्रिकं नृपः ९६
गजं च गजसादिं च महारथिकमस्तकं
छित्वा निवेदयेद्राज्ञो द्विसाहस्त्रं स चार्हति ९७
हयारूढवरं हत्वा पादाताधिपतिं तथा
वर्वाणां च सहस्त्रस्य योग्यो भवति राजतः ९८
शत्रुसैन्यात्कुंजरं वा रथं वा यस्समाहरेत्
पंचाशद्वर्वसंमानं स प्राप्नोत्विह राजतः ९९
प्रतिप्रयाणं भृत्यानां भक्तं देयं स्थितौ न हि
मार्गायासं विदित्वैषां वेतनादधिकं त्विदं १००
अन्येषु वा साहसेषु वेतनादधिकं नृपः
लोकसंग्रहणार्थं च दद्याद्वै पारितोषिकं १०१
भटेभ्यश्चैव वस्त्राणि रजकानां च वेतनं
तद्वेतनेनैव कल्प्यान्यौषधानि च रोगिणां १०२
परराष्ट्रार्जितं द्रव्यमर्धं राजा विभज्य तु
योधेभ्योऽर्धं प्रदेयं स्यादर्धं च स्वयमाहरेत् १०३
हयं वा शकटीं वापि हरेत् सोपस्कृतां भटः
तदर्घतुर्यमंशं तु स लभेद्राजसत्कृतः १०४
शिथिलानि च शस्त्राणि लुंठितं शत्रुभिर्युधि
स्वयोधानां नृपो दद्याद्वेतनं परिहाप्य च १०५
युद्धे स्वार्थं मृता ये च शत्रुभिस्तत्स्वबंधुषु
सेवया जीरिता ये च देयं तेषां तु जीवनं १०६
मृतानां जीवतां चापि पूर्वं सेवापरात्मनां
तदीयानां तु तेषां वा पूर्वभर्मार्धजीवनं १०७

संग्रामेऽभिमुखाः कृत्ता युवानो नमृता भटाः
राजसेवास्वशक्ता ये तेषां पूर्वार्धजीवनं १०८
शत्रूणामुपघातार्थं तस्य मर्माणि योऽर्पयेत्
स्वस्मै तस्यापि कर्मण्या द्विगुणा परिकीर्तिता १०९
शत्रुसेनाविभेत्तारं दुर्गारोहणतत्परं
स्वराज्यवृद्धिकर्तारं योजयेद्द्रविणोत्करैः ११०
इत्थंविधाभिस्तु भटान् नियोज्य
राजा कृतार्थस्तु रिपून्निहत्य
संप्राप्य कीर्तिं महतीं श्रियं च
महीयते राजवराभिवंद्यः १११

इति श्रीमन्नीतिशास्त्रे नीतिप्रकाशिकायां
सेनानयकथनं नाम षष्ठोऽध्यायः

## सप्तमोऽध्यायः

अथ सैन्यं प्रवक्ष्यामि सेनानयविवृद्धये
पत्तिमारभ्य गणनां यावदक्षौहिणी तव १
शतांगानामिभानां च सैन्धवानां महीपते
पदातीनां च भद्रं ते सैन्यस्थानां विशेषतः २
पत्तिस्सेनामुखं गुल्मं गणो वै वाहिनी ततः
पृतना चम्वनीकिन्यौ ततश्चाक्षौहिणी स्मृता ३
एते सेनाविशेषा वै पत्तौ मुख्यान् वदामि ते
रथं नागं तुरंगांश्च पदातींश्च विशेषतः ४
एको रथो गजश्चैको नराः पंच हयास्त्रयः
यस्यां सा पत्तिरेतेषां सहायान् प्रब्रुवेऽधुना ५
नागा दश रथस्यास्य शतमश्वास्सहानुगाः
सहस्रं तु नराः प्रोक्ताः परिवारा नृपाज्ञया ६

एकस्यैकस्य नागस्य शतमश्वाः प्रयायिनः
पदातयस्सहस्त्रं तु प्रच्यंगेष्वनुयायिनः ७
एकस्यैकस्य चाश्वस्य सहस्त्रं तु पदातयः
दश चैतान् पतीन् युङ्क्वा कात्स्न्र्येन गणना त्वियं ८
एको रथो दश गजास्सहस्त्रं चात्र वाजिनः
लक्षसंख्या नराः पत्तावेवमग्रेऽपि योजना ९
पच्यंगैस्त्रिगुणैस्सर्वैः क्रमादाख्या यथोत्तरं
अनीकिनीं दशगुणामाहुरक्षौहिणीं बुधाः १०
सेनामुखे तु गुणितास्त्रयश्चैव रथा गजाः
त्रिंशत्त्रिलक्षपदगास्त्रिसहस्त्रं हि वाजिनः ११
गुल्मे नव रथाः प्रोक्ता नागानां नवतिं विदुः
अश्वानां नवसाहस्त्रं नवलक्षाः पदातयः १२
गणाख्ये तु शतांगानां वराणां सप्तविंशतिः
स्तंबेरमाणां द्विशतं सप्ततिं प्राहुरार्यकाः १३
सप्तविंशतिसाहस्त्रा गंधर्वाः परिकीर्तिताः
सप्तविंशतिलक्षास्तु स्मृताश्चात्र पदातयः १४
वाहिन्यां स्यंदनाः प्रोक्ता ह्येकाशीत्या नियोजिताः
दशोत्तराष्टशतकाः पद्मिनश्चात्र कीर्तिताः १५
एकाशीतिसहस्त्रास्तु तुरंगास्संप्रकीर्तिताः
एकाशीतिकलक्षा वै विख्याताः पादचारिणः १६
त्रयश्च चत्वारिंशच्च द्विशतं पृतनारथाः
चतुश्शतं च त्रिंशच्च द्वेसहस्त्रे च दंतिनां १७
तुरंगाणां सहस्त्राणि त्रिचत्वारिंशदेव तु
द्वे लक्षे चैव राजेन्द्र द्वे कोटी च नृणां भवेत् १८
त्रिचत्वारिंशच्च लक्षं पदातीनां निबोध मे
चम्वाख्ये सप्तमव्यूहे गणनां वच्मि विस्तरात् १९

चम्वां सप्तशतं चैकन्यूनत्रिंशद्रथास्स्मृताः
सप्तैव च सहस्राणि द्वे शते नवतिस्तथा २०
गजानां सप्तलक्षाणि चैकोनत्रिंशदेव तु
सहस्राणि हयानां च पदातीनामथो शृणु २१
सप्त कोटयश्च चैकोनत्रिंशल्लक्षाणि भूपते
जगुर्गणिततत्त्वज्ञा गणनां बुद्धिजीविनः २२
अनीकिन्यां द्वे सहस्रे सप्ताशीत्यधिकं शतं
रथानामथ नागानां गणनां वच्मि तेऽनघ २३
एकविंशत्सहस्राणि तथा चाष्टशतं नृप
सप्ततिश्चेत्यथाश्वानां संख्यां शृणु समाहितः २४
एकविंशतिलक्षाणि सप्ताशीतिसहस्रकं
एकविंशतिकोटयश्च पदातीनां नराधिप २५
सप्ताशीतिं च लक्षाणां विद्धि बुद्धिमतां वर
एतद्दशगुणा च स्यात्तां त्वमक्षौहिणीं शृणु २६
अक्षौहिण्यां त्वेकविंशत्सहस्राणि जनाधिप
तथा चाष्टशतं चैव सप्ततिं रथगां विदुः २७
अष्टादशसहस्राणि द्वे लक्षे च नरेश्वर
तथा सप्तशतं चैव गजानां गणना त्वियं २८
द्वे कोटी चैव लक्षाणामष्टादश महीपते
तथा सप्ततिसाहस्रा गंधर्वाश्शीघ्रयायिनः २९
द्वे चार्बुदे च कोटिश्चाप्यष्टादश समीरिताः
लक्षाणां सप्ततिश्चैव पदातीनामितीयती ३०
एतानक्षौहिणीसंस्थान् विना राज्ञो रथा गजाः
अश्वास्स्वतंत्रास्संत्यन्ये पृष्ठगोपा नृपस्य ते ३१
पच्याद्यंगे ध्वजपटाः पृथक्कार्या विशेषतः
स्वसैन्यस्य च शत्रोश्च वैलक्षण्यस्य सिद्धये ३२

युवराजाय वर्णाणां पञ्चसाहस्रिकी भृतिः
सर्वसेनाप्रणेत्रे च चतुस्साहस्रिकी च सा ३३
भृतिश्चातिरथे देया वर्णाणां त्रिसहस्रकं
महारथाय साहस्रद्वयं राज्ञाधिमासिकं ३४
वेतनं रथिकायाथ साहस्रं गजयोधिने
दद्यादर्धरथायाथ वेतनं शतपञ्चकं ३५
एकस्मै रथिकायाथ तादृशे गजसादिने
निष्काणां त्रिशतं दद्याद्यतस्तौ तत्कुटुंबिनौ ३६
सर्वाश्वाधिपती राज्ञस्त्रिसाहस्रं स चार्हति
पादाताधिपतिश्चापि द्विसाहस्रस्य भाजनं ३७
पादातानां सहस्रस्य नेत्रे पंचशतं स्मृतं
तथा चाश्वसहस्रेशे सहस्रं वेतनं भवेत् ३८
पदातये सुवर्णानां पंचकं वेतनं भवेत्
शतपच्यधिपे सप्त वर्णाणां हययायिने ३९
गजयंतुस्सारथेश्च ध्वजिने चक्रपाय च
पदातित्रिशतेशाय पथिकोष्ट्रचराय च ४०
वार्तिकाधिपतेश्चापि वेत्रिणां पतये तथा
सूतमागधवंदीनां पतये वीवधाधिपे ४१
सेनाया भृतिदात्रे च भटानां गणनापरे
मासि मासि तु वर्णाणां दश पंच च वेतनं ४२
तत्तत्कार्यानुसारेण कुलपर्यायतस्तथा
भटानां तु भृतिः कल्प्या तत्तत्कालानुसारतः ४३
आहवेषु मिथश्शूरा जिघांसन्तो महीक्षितः
युध्यमानाः परं शक्त्या स्वर्गं यांत्यपराङ्मुखाः ४४
न कूटैरायुधैर्हन्याद्युध्यमानो रणे रिपून्
दिग्धैरग्न्युज्वलैर्यंत्रैस्तंत्रैश्चैव पृथग्विधैः ४५

न हन्याद्वृक्षमारूढं न क्लीबं न कृतांजलिं
न मुक्तकेशं नासीनं न तवास्मीति वादिनं ४६
न प्रसुप्तं न प्रणतं न नग्नं न निरायुधं
न युध्यमानं पश्यन्तं न परेण समागतं ४७
आयुधव्यसनं प्राप्तं नार्तं नातिपरिक्षतं
न हीनं न परावृत्तं न च वल्मीकमाश्रितं ४८
न मुखे तृणिनं हन्यान्न स्त्रियो वेषधारिणं
एतादृशान्भटैर्वापि घातयन् किल्बिषी भवेत् ४९
हन्यमानस्य यत्किंचिद्दुष्कृतं पूर्वसंचितं
तत्संगृह्य स्वसुकृतं तेभ्यो दद्यात्तथाविधः ५०
मार्गशीर्षे शुभे मासि कुर्याद्यात्रां महीपतिः
फाल्गुने वापि चैत्रे वा यदा पश्येद्ध्रुवं जयं ५१
शत्रुसेविनि मित्रे च गूढयत्नतमो भवेत्
गतप्रत्यागते चैव स हि कष्टतमो रिपुः ५२
दंडव्यूहेन सेनां तु नयेत् तु शकटेन वा
वराहगरुडाभ्यां वा सूच्या वा मकरेण वा ५३
यतो भवेद्भयं शत्रोस्ततो विस्तारयेद्बलं
सेनापतिबलाध्यक्षान् सर्वदिक्षु निवेशयेत् ५४
यतश्शंका भवेद्भीतस्तां प्राचीं कल्पयेद्दिशं
सूच्या वक्रेण चैवैनान् योधयेद्व्यूह्य वैरिणः ५५
गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समंततः
स्थाने युद्धे च कुशलानभीरूनरिघातिनः ५६
यवसान्नोदकधनान्युपरुन्ध्याद्रिपोर्युधि
चेष्टाश्चैव विजानीयादरीन् योधयतां स्वयं ५७
उपजप्यानुपजपेद्भेद्यांश्चैव विभेदयेत्
लुब्धान् दानेन बिभृयाच्छत्रोर्योधान्यथोचितं ५८

तादृशानेव स्वीयांस्तु शिक्षयेदविचीरयन्
गोपयेत्स्वीयमार्गांश्च परमर्मपरो नृपः ५९
युद्धकाले ह्यनुप्राप्ते स्वीयाज्ञापरिपंथिनां
पलायनपराणां च स्वयोधानामुपेक्षिणां ६०
व्याजेन युध्यतां चैव सैन्यपानां सुलोभिनां
पराङ्मुखपराणां च मिथो योधविभेदिनां ६१
शत्रुषु स्वीयमार्गांश्च व्याजात्ख्यापयतां स्फुटं
रिपूणां मार्गदातृणां स्वापदं चाभिनन्दतां ६२
तेषां प्राणान्तिको दंडो राज्ञा कार्यो विजानता
सुमहत्यपराधेऽपि दूतवध्या विगर्हिता ६३
योऽदंड्यान्मोचयेद्राजा सम्यग्दंड्यांश्च घातयेत्
इष्टं भवेत् क्रतुशतैस्तेन धर्मानुवर्तिना ६४

इति श्रीमन्नीतिशास्त्रे नीतिप्रकाशिकायां
सैन्ययोगकथनं नाम सप्तमोऽध्यायः

## अष्टमोऽध्यायः

राजधर्मान्प्रवक्ष्यामि यथावृत्तो भवेन्नृपः
लोकरंजनमेवात्र राज्ञो धर्मस्सनातनः १
यदा हि गर्भिणी हित्वा स्वं प्रियं मनसेऽनुगं
गर्भस्य हितमाधत्ते तथा कुर्यात्प्रजाहितं २
अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो यतः
तस्मादभिभवेद्राजा सर्वभूतानि तेजसा ३
सोऽग्निर्भवति वायुश्च सोऽर्कस्सोमस्स धर्मपः
स कुबेरस्स वरुणस्स महेन्द्रः प्रभावतः ४
बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः
महती देवता ह्येषा नररूपेण तिष्ठति ५

एकमेव दहत्यग्निर्नरं दुरुपसर्पिणं
कुलं दहति राजाग्निस्सपशुद्रव्यसंचयं ६
तस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे
मृत्युश्च वसति क्रोधे तस्मात् सर्वाश्रयस्तु सः ७
अगूढविभवा यस्य पुरराष्ट्रनिवासिनः
नयापनयवेत्ता यस्स राजा त्विदमाचरेत् ८
उत्थौयापररात्रेषु चिन्तयेदर्थनिर्णयं
गुणदोषान् स्वयं बुध्वा कर्तव्यार्थे प्रसन्नधीः ९
दैवं हृदा दृढं ध्यात्वा कृत्वा मङ्गलपाठकं
शुचिर्भूत्वा तु विधिवन्मङ्गलालम्बनं चरेत् १०
नित्यकर्म समाप्याथ नित्यदानं विधाय च
त्रैविद्यवृद्धान् नत्वा तु तिष्ठेदेषां च शासने ११
तेभ्योऽधिगच्छेद्विनयं विनीतात्मा हि नित्यशः
वनस्थाश्चैव राज्यानि विनयात् प्रतिपेदिरे १२
इंद्रियाणां जये योगमधितिष्ठेद्दिवानिशं
जगज्जितेंद्रियस्येदं वशे भवति नित्यदा १३
अरिषड्वर्गरहितो वेदशास्त्रपरश्शुचिः
प्रातःकाले व्यतीते तु भूषितस्तु सभां व्रजेत् १४
उच्चासनस्थो नृपती राज्यतंत्रं विचारयेत्
धर्मासने समारोप्य विप्रं सुज्ञं पुरोहितं १५
जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः
धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथञ्चन १६
यस्य शूद्रस्तु कुरुते राज्ञो धर्मविवेचनं
तस्य सीदति तद्राष्टं पंके गौरिव पश्यतः १७
मौलांञ्छास्त्रविदश्शूराल्लँब्धलक्षान् कुलोद्भवान्
सचिवान् सप्त चाष्टौ वा कुर्वीत सुपरीक्षकान् १८

सुमंत्रिणः प्रकुर्वीत द्वौ वा त्रीन् न्यायवादिनः
तैस्सार्धं चिन्तयेदर्थान् पट्टनेऽर्थपरो नृपः १९
द्वारपालान् पृष्ठगोपान् सभानेतृनथाश्रवान्
समाज्ञाप्य विधानेन सावधानमना भवेत् २०
दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदं
इङ्गिताकारचेष्टाज्ञं शुचिं लालाटिकं हितं २१
धर्मशास्त्रानुसारेण सामात्यस्सपुरोहितः
व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैस्सह २२
सेनाकर्म समालोक्य भृतिं तेभ्यो विधाय च
दीनान्धकृपणानां च वृत्तिं सम्यग्विचार्य च २३
आयव्ययं च विज्ञाय आयत्यभ्युदयं तदा
कृषीवलानां कृत्वा तु योगक्षेमौ च जीवनं २४
दुर्भिक्षव्यसनोपेतान् विदित्वा तु परोक्षतः
तेभ्यः प्रदाय स्वद्रव्यं यथायोग्यं विवर्ध्य तान् २५
स्वद्रव्यमाहरेत् तेभ्यस्सुपुष्टेभ्यस्समाहितः
अवधेः पत्रिकां तेभ्यो लेखयित्वा स्वहस्ततः २६
उन्मोच्य चाधिकारिभ्यो भयात् क्षुद्रान् स्वयं नृपः
पारितोषिकवस्त्राणि तेषां दत्वा यथाविधि २७
वाचा तान् भीषयित्वा तु हृदयार्द्रो महीपतिः
व्यवस्थां विदधन्नेभ्यस्सामदानविचक्षणः २८
चारेभ्यश्चाधिकारिणां चरितानि विचार्य च
दुष्टानां शिक्षणं कुर्याद्दंडनीतिप्रवर्तकः २९
यत्र श्यामो लोहिताक्षो दंडश्चरति पापहा
प्रजास्तत्र न मुह्यंति नेता चेत्साधु पश्यति ३०
अकालक्रयविक्रेयकर्तृणां स्वार्थकामिनां
प्रजाभ्यो दायकर्तृणां स्वामिकार्यविघातिनां ३१

प्रजोद्वेजनकर्तॄणामुग्रदंडेन दुःखतः
गोदेवब्राह्मणस्वानां हर्तॄणां लोभदोषतः  ३२
राजाज्ञाप्रतिबन्दीनां राजद्रोहपरात्मनां
स्वराजचरिताख्यानकर्तॄणां शत्रुराजके  ३३
सेतुभेदकराणां च चोरमोचनकारिणां
राजस्वे च प्रमत्तानां राजकोशापहारिणां  ३४
स्वाधीनाधिकृतानां तु वेतनार्धं प्रगृह्णतां
स्वयूधभेदकर्तॄणामभिचाररतात्मनां  ३५
अपलापप्रसक्तानां स्ववाक्ये राजसन्निधौ
राजस्वेऽन्यत्वकर्तॄणां तटाकारामघातिनां  ३६
शिक्षणार्थं चरा योज्यास्तेभ्यो विज्ञाय तत्त्वतः
तेषां व्यतिक्रमं पश्चाच्छिक्षयेन्नीतिमार्गतः  ३७
अधिकारप्रच्यवैश्च कारागाराधिवासनैः
निगलालंबनैश्चैव राष्ट्रनिष्कासनैस्तथा  ३८
सर्वस्वहरणैश्चैव नीचकृत्यप्रचोदनैः
प्रावारेणैकवस्त्रेण चतुष्पथनिवेशनैः  ३९
परिवर्तनाधिकारैश्च कायक्लेशोपपादनैः
मृद्वाहैश्च कशाघातैर्विरूपकरणैस्तथा  ४०
एतैरन्यैर्यथाशास्त्रं शिक्षयेदधिकारिणः
राज्ञा तु शिक्षितान् दृष्ट्वा ये हसेयुश्च तानपि  ४१
राज्ञोपहासनिंदे च राजदारान् हसंति ये
नीवृज्जनानमार्गस्थाञ्ज्ञात्वा संशिक्षयेन्नृपः  ४२
मृदुर्हि राजा सततं लघुर्भवति सर्वशः
तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाचरेत्  ४३
राजानं प्रथमं विन्देत्ततो भार्यां ततो धनं
राजन्यसति लोकेऽस्मिन् कुतो भार्या घनं कुतः  ४४

आयानुकूलं कुर्वीरन् भृत्या राजहितैषिणः
पश्चान्निवेदयेयुस्तदन्यथा दंडभागिनः ४५
ग्रामस्वाधिपतिः कार्यो दशग्रामाधिपस्तथा
विंशतीशश्शतेशश्च सहस्रेशो नृपेण तु ४६
ग्रामीयान् ग्रामदोषांश्च ग्रामिकः परिपालयेत्
तानाचक्षीत दशिने दशको विंशतीश्वरे ४७
विंशतीशश्च तत्सर्वं वृत्तं जानपदे जने
ग्रामाणां शतपालाय सर्वं वै विनिवेदयेत् ४८
यानि ग्रामिकभोज्यानि ग्रामिकस्तान्युपाश्नुते
हिरण्यधान्यभागेन यतो राष्ट्रीयकस्स्मृतः ४९
दशी तेन विभक्तव्यो विंशतीशस्तथा स्मृतः
ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृतः ५०
शाखानगरमर्हस्तु सहस्रपतिरुत्तमं
दिक्पालासनयोग्योऽसौ शतादिग्रामनायकः ५१
तेषां यद्ग्रामकृत्यं स्याद्राष्ट्रकृत्यं च यद्भवेत्
धर्मज्ञस्सचिवः कश्चित्तदपेक्षेदतंद्रितः ५२
नगरे नगरे च स्यादेकस्सर्वार्थचिंतकः
उच्चस्थानो घोररूपो नक्षत्राणामिव ग्रहः ५३
स च तान् संपरिक्रामेत् सर्वानेव सदा कृती
तेषां वृत्तिं हि गणयेत् सम्यग्राष्ट्रैस्स्वचारकैः ५४
जिघांसवः पापकामाः परस्वादायिनश्शठाः
तत्तद्रक्षास्वधिकृतास्तेभ्यो रक्षेदिमाः प्रजाः ५५
उच्चावचाः करा न्यायाः पूर्वराज्ञां युधिष्ठिर
यथा यथा न हीयेयुस्तथा कुर्यान्महीपतिः ५६
ब्राह्मणेभ्यो नाददीत शुल्कं राजा तथा करं
न ब्राह्मणधनस्वामी कदाचित् स्यान्नराधिपः ५७

आयं तु विपुलं कुर्याद्व्ययं कुर्यात् सुसूक्ष्मकं
नीवृद्यात्रां तथा भूपो लोकानुग्रहकृत् स्वयं ५८
बंधयेच्च तटाकानि सरांसि स्वगृहाणि च
श्रेणीवृक्षांस्तथारामान् गोपयेच्च सुमार्गकृत् ५९
सन्मानं चैव कुर्वीत विद्यावृद्धद्विजातिषु
अवमत्यादिभिर्दण्डैर्विप्रान् विद्यासु योजयेत् ६०
अलब्धमीहेद्धर्मेण लब्धं यत्नेन पालयेत्
पालितं वर्धयेन्नित्यं वृद्धं पात्रेषु निक्षिपेत् ६१
भोगं च दद्याद्विप्रेभ्यो वसूनि विविधानि च
अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादनं ६२
दत्वा भूमिनिबंधं वा कृत्वा लेख्यं तु कारयेत्
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ६३
दत्वा भूम्यादिकं राजा ताम्रपट्टेऽथवा पटे
शासनं कारयेद्धर्म्यं स्थानवंशादिसंयुतं ६४
स्वदत्ताद्द्विगुणं पुण्यं परदत्तानुपालनं
परदत्तापहारेण स्वदत्तं निष्फलं भवेत् ६५
पूर्वराजकृता या तु मर्यादा जनजीविका
तां न च व्यंसयेद्राजा नाशयन् निंदितो भवेत् ६६
मंत्रो विजयमूलं हि राज्ञां भवति नित्यदा
अतस्तु मन्त्रिभिर्मंत्रं सह राजा विचिंतयेत् ६७
गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः
अरण्ये निश्शलाके वा मन्त्रयेत् पृथिवीपतिः ६८
निस्तंभे निर्गवाक्षे च निर्भित्त्यंतरसंश्रये
प्रासादाग्रेऽप्यरण्ये ह मन्त्रयेत्सावधानतः ६९
यस्य मन्त्रं न जानन्ति समागम्य पृथग्जनाः
स चिरं पृथिवीं भुंक्ते कोशहीनोऽपि पार्थिवः ७०

जडान्धमूकबधिरान् काणाशौण्डाधमानपि
स्त्रीम्लेछव्याधितव्यङ्गान् मन्त्रकाले विवर्जयेत्  ७१
उपायांश्चतुरो युंज्यात् षड्गुणानुदयांश्च त्रीन्
तिस्रश्शक्तींश्च सिद्धींश्च मन्त्रयेन्मंत्रिभिस्सह  ७२
साम दानं च भेदश्च दण्डश्चेति चतुर्विधः
उपायस्सर्वकृत्येषु प्रयोज्यो बुद्धिजीविभिः  ७३
साम पञ्चविधं ज्ञेयं परानुसरणं तथा
परस्परोपकारश्च तदीयगुणकीर्तनं  ७४
बंधुत्वज्ञापनं स्वात्मसमर्पणमितीव च
एवं पंचविधं ज्ञात्वा समासव्यासतस्सुखी  ७५
दानं पञ्चविधं प्राहुस्स्वधनस्य समर्पणं
अन्यद्रव्यग्रहामोदोऽपूर्ववस्तुप्रदानकं  ७६
परद्रव्ये प्रेरणं च ऋणमोचनमेव च
स्वदौर्बल्ये प्रयोगोऽस्य शत्रुपक्षे स्वयं विधिः  ७७
भेदस्त्रिधा अन्यतरस्नेहसंपादनं पुरा
परस्परं मित्रभेदस्तथा संतर्जनं परं  ७८
दण्डस्त्रिधार्थहरणं परिक्लेशस्तथैव च
देहसंशिक्षणं चेति दण्डभेदाः प्रकीर्तिताः  ७९
तदात्वायतिसंयुक्तस्संधिर्ज्ञेयो द्विलक्षणः
राज्ञा कृतश्च कार्यार्थमकाले काल एव वा  ८०
मित्रेण चैव विकृते द्विविधो विग्रहस्स्मृतः  ८०
एकाकी वाच्यैककारिकार्ये प्राप्ते यदृच्छया
संभूय चैव मित्रेण द्विविधं यानमुच्यते  ८१
क्षीणस्य चैव क्रमशो दैवात्पूर्वकृतेन वा
मित्रस्य चानुरोधेन द्विविधं कृतमानसं  ८२
बलस्य स्वामिनश्चैव स्थितिकार्यस्य सिद्धये

द्विविधं कीर्त्यते द्वैधं तद्गुणागुणवेदिभिः
यदावगतं न्यूनत्वमाधिक्यं ध्रुवमात्मनः ८४
अर्थसंपीडनार्थं च पीड्यमानस्य शत्रुभिः
साधुभिर्व्यपदेशार्थो द्विविधस्तु समाश्रयः ८५
क्षयस्स्थानं च वृद्धिश्चेत्युदयस्त्रिविधस्स्मृतः
प्रभुमंत्रोत्साहभेदाच्छक्तिस्तु त्रिविधा मता ८६
तत्साध्यसिद्धयस्तिस्रस्तेषु भेदा बहु स्मृताः
एतद्धि नीतिसर्वस्वं भूप किं विस्तरेण ते ८७
एवं सर्वमिदं राजा सह संमंत्र्य मंत्रिभिः
मध्याह्नेऽर्थागमं कृत्वा भोक्तुमन्तःपुरं व्रजेत् ८८
सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः
भुक्त्वा संविहरेच्चैव स्त्रीभिरन्तःपुरे सह ८९
धर्मशास्त्रपुराणानि ह्यपराह्णे समभ्यसेत्
संध्यां चोपास्य विधिवदग्निं हुत्वा समाहितः ९०
भुक्त्वा भागवतं शास्त्रं पठित्वा ध्यानसंयुतः
संविशेच्च यथाकालमुत्तिष्ठेद्विगतक्लमः ९१
एवंवृत्तस्य नृपतेर्नीतिमार्गानुसारिणः
धर्मार्थकाममोक्षाश्च सिध्येयुर्नात्र संशयः ९२
पृथुमेवं प्रशास्यैव ब्रह्मा लोकगुरुस्त्वयं
तत्रैवान्तर्दधे देवो दैवतैस्सहितस्तथा
वैन्योऽपि तत् तथा चक्रे ब्रह्मप्रोक्तं पुरातनं
भुक्त्वा ससागरामुर्वीमन्ते ब्रह्म जगाम हा ९४
पारीक्षित त्वमप्येवं कृत्वा सौख्यं भविष्यसि
ख्यातिं च लोके संस्थाप्य परां गतिमवाप्स्यसि ९५
यावत्कीर्तिर्मनुष्यस्य लोकेषु विचरिष्यति
तावद्वर्षसहस्राणि ब्रह्मलोके महीयते ९६

पठेच्च य इदं काव्यं शृणुयाद्वा समाहितः
ब्राह्मणः क्षत्रियो राजा विशेषेण नराधिपः ९७
वैश्यो वा शूद्रजातीयस्स्त्रियो राजपरिग्रहाः
ते कीर्तिमन्तो भूत्वेह परत्र गतिमाप्नुयुः ९८
नीतिशास्त्रमिदं प्रोक्तं मया ते जनमेजय
संक्षेपेण गमिष्यामि यत्र व्यासो गुरुर्मम ९९
वैशंपायन इत्युक्त्वा तत्रैव स जगाम ह
पारीक्षितोऽपि मुमुदे सुनीत्या पालयन् प्रजाः १००

इति श्रीमन्नीतिशास्त्रे नीतिप्रकाशिकायां
राजव्यापारकथनं नामाष्टमोऽध्यायः

नीतिप्रकाशिका समाप्ता